# ॥ श्रीहरिशरणाष्टकम् ॥

श्रीगणेशाय नमः ॥

ध्येयं वदन्ति शिवमेव ही केचिदन्ये
शक्तिं गणेशमपरे तु दिवाकरं वै ।
रूपैस्तु तैरपि विभासि यतस्त्वमेकस्-
तस्मात्त्वमेव शरणं मम शङ्खपाणे ॥ १॥

नो सोदरो न जनको जननी न जाया
नैवात्मजो न च कुलं विपुलं बलं वा ।
संदृष्यते न किल कोऽपि सहायको मे
तस्मात्त्वमेव शरणं मम शङ्खपाणे ॥ २॥

नोपासिता मदमपास्य मया महान्तस्-
तीर्थानि चास्तिकधिया नहि सेवितानि ।
देवार्चनं च विधिवन्न कृतं कदापि
तस्मात्त्वमेव शरणं मम शङ्खपाणे ॥ ३॥

दुर्वासना मम सदा परिकर्षयन्ति
चित्तं शरीरमपि रोगगणा दहन्ति ।
सञ्जीवनं च परहस्तगतं सदैव
तस्मात्त्वमेव शरणं मम शङ्खपाणे ॥ ४॥

पूर्वं कृतानि दुरितानि मया तु यानि
स्मृत्वाखिलानि हृदयं परिकम्पते मे ।
ख्याता च ते पतितपावनता तु यस्मात्
तस्मात्त्वमेव शरणं मम शङ्खपाणे ॥ ५॥

दुःखं जराजननजं विविधाश्च रोगाः
काकश्वसूकरजनिर्निरये च पातः ।
त्वद्विस्मृतेः फलमिदं विततं हि लोके
तस्मात्त्वमेव शरणं मम शङ्खपाणे ॥ ६॥

नीचोऽपि पापवलितोऽपि विनिन्दितोऽपि
ब्रूयात्तवाहमिति यस्तु किलैकवारम् ।
तं यच्छसीश निजलोकमिति व्रतं ते
तस्मात्त्वमेव शरणं मम शङ्खपाणे ॥ ७॥

वेदेषु धर्मवचनेषु तथागमेषु
रामायणेऽपि च पुराणकदम्बके वा ।
सर्वत्र सर्वविधिना गदितस्त्वमेव
तस्मात्त्वमेव शरणं मम शङ्खपाणे ॥ ८॥

॥ इति श्रीपरमहंसस्वामिब्रह्मानन्दविरचितं
श्रीहरिशरणाष्टकं सम्पूर्णम् ॥